(3) That the author used only 12 Swaras in describing his Rāgas

(4) That many of the Rāga-lakṣanas in the book will be useful even now

(5) That all music was confined to the sadja-grāma only

(6) That the method of obtaining Rāgas from the Mūrcchanās and Jātis had become obsolete " ( Upper India page 9 )

" Lochana Pandit lays down the following twelve Thātas and then classifies his ' janya ' Rāgas under them –

| | | |
|---|---|---|
| १ भैरवी | ५ केदार | ९ धनाश्री |
| २ तोडो | ६ इमन | १० पूर्वा |
| ३ गौरी | ७ सारग | ११ मुखारी |
| ४ कर्णाट | ८ मेघ | १२ दीपक " ( page 16 ) |

About Śuddha Thāta of Rāgatarangini, Pandit Bhatkhande says " it was no other than the Kāfi Thāta of our current Hindustani Music The śuddha ' ga ' and suddha ' ni ' of Lochana Pandit are the Hindusthani komal ' ga ' and komal ' ni ' " (Page 16)

Let us see whether we can classify some of the Rāgas given in Kṛīṣṇagīti under the Thātas of R T We can, then, turn our attention to the description of those Thāṭas and the Rāgas

" The twelve Thāṭas of Lochana with their Swaras may be written in the terms of the Hindustani Swara names thus

(१) भैरवी–सा री शुद्ध ग कोमल, म शुद्ध, प शुद्ध, ध शुद्ध, नि कोमल ।

(२) तोडी–सा, री कोमल, ग कोमल, म शुद्ध, प शुद्ध, ध कोमल, नि कोमल ।

(३) गौरी-सा, री कोमल, ग शुद्ध, म शुद्ध, प शुद्ध, ध कोमल, नि शुद्ध ।

(४) कर्णाट–सा, री शुद्ध ग शुद्ध, म शुद्ध, प शुद्ध, ध शुद्ध, नि कोमल ।

(५) केदार–सा, री शुद्ध, ग शुद्ध म शुद्ध, प शुद्ध, ध शुद्ध नि शुद्ध ।

(६) इमन–सा, री शुद्ध, ग शुद्ध, म तीव्र, प शुद्ध, नि शुद्ध ।

(७) सारग–सा, री शुद्ध, ×, म शुद्ध, & तीव्र, प शुद्ध ×, नि कोमल & शुद्ध ।

(८) मेघ–सा, री शुद्ध, ग शुद्ध, प शुद्ध, ×, नि कोमल & शुद्ध ।

(९) पूर्वा–सा, री शुद्ध, ग शुद्ध, म तीव्र, प शुद्ध, ×, नि कोमल & शुद्ध ।

(१०) धनाश्री–सा, री कोमल, ग शुद्ध, म तीव्र, प शुद्ध, ध कोमल, नि शुद्ध ।

(११) मुखारी–सा, री शुद्ध, ग कोमल, म शुद्ध, प शुद्ध, ध कोमल, नि कोमल ।

(१२) दीपक–Nil. " ( page 20 )

Kṛṣnagīti has in all the following fifteen Rāgas —

कानड, गूर्जरी, केदार, विराडी, रामगिरी, सामेरी, काहली, मेवाड, श्रीराग, आसावरी, धन्याशी, सारङ्ग, देशाख्य, वसन्त and भैरव

Of these, the following are mentioned in Rāgataraṅgiṇī —

धनाश्री–धनाश्री.

गौरी–वसन्त, भैरव, गुर्जरी, आसावरी

कर्णाट–कर्णाट, श्रीराग, केदार

I cannot say how far the Rāga modes of Somanātha continue to the present day This is a matter on which only those scholars who have a deep knowledge of the Sanskrit texts on music and the practical art of singing can throw light Pandit Bhatkhande was such a scholar, whose works, like the लक्ष्यसंगीत in Sankrit and the voluminous commentary on the same in Marathi named हिन्दुस्तानी संगीतपद्धति, may be consulted for the purpose

Befere concluding, I must not omit to tender my most sincere thanks to revered Āchārya Śri Muni Jinavijayaji, the Honorary Director of Rajasthan Puratattava Mandir, Jaipur, for not only accepting this work for publication in Rajasthan Puratattva Series but also for being kind enough to spare time to go over the greater portion of the text with me and make several important suggestions which have been mostly acted upon I must also thank Pt K K Shastree for help of various kinds, Lastly I am much indebted to Prof R C Parikh, my teacher in Ancient Indian Culture and guide in the preparation of my thesis for the Ph D degree, for giving much of his valuable time for discussing with me several problems connected with my rerearch work and especially the preparation of the present text As Director of the Institute in which I am working, he was kind enough to get permission for me from the authorities concerned to undertake this work

Ahmedabad

1-8-1952

**Priyabala Shah**

## सोमनाथकवि–विरचिता

# श्री कृष्ण गीतिः ।

[ १ ]

[1]वन्दे नन्दकिशोरस्य चरणाम्बुजमद्भुतम् ।
यद्गोपिकाकराम्भोजभासुरश्रीविवर्धनम् ॥ १

उदेतु हृदयाकाशे नन्दनन्दनचन्द्रमाः ।
विकाशयतु मच्चित्तवृत्तिकैरविणीकुलम् ॥ २

गोपस्त्रीवशकारिणी शशधरज्योत्स्नातिरस्कारिणी
सर्वामङ्गलहारिणी स्मररसप्रख्यातिसञ्चारिणी ।
राधाजीवितधारिणी व्रजकुलस्यानन्दविस्तारिणी
हासश्रीर्व्रजसुन्दरस्य विशदा भूयान्मम श्रेयसे ॥ ३

श्रीराधिकानवलकेलिवशीकृतस्य
कृष्णस्य गीतमिदमद्भुतभावपूर्णम् ।
कृष्णांह्रिपद्ममकरन्दलिहां नराणा-
मानन्दनाय कुरुते द्विजसोमनाथः ॥ ४

जयदेवकृताविवात्र मे न गुणा यद्यपि नैव चातुरी ।
तदपि व्रजनाथकीर्तने विदुषो न प्रतिभाति मूकता ॥ ५

कानड–रागेण गीयते ॥ १ ॥

जय जय राधिकारमणीय ।
कुञ्जनाथ कलेश केशव कामिनीकमनीय ॥ ध्रु० १

माधव व्रजनाथ वल्लववल्लभासुरतेश ।
मञ्जुलभ्रुकुटीतटप्रकटीकृतस्मरवेश ॥ २

मीनकुण्डलमण्डिताननखण्डिताधर धीर ।
नीलरत्ननवीननीरदराजमानशरीर ॥ ३

1 Ms begins: श्रीगणेशाय नमः । श्रीगोपालाय नम ।

वल्लवीमुखचन्द्रचुम्बनलुब्धदृष्टिचकोर ।
मानिनीरतिकन्द मानद वन्द्य नन्दकिशोर ॥ ४
गोकुलेश गुणज्ञ गोधनचारणप्रिय देव ।
गोपिकागणगीतगौरव नागरीकृतसेव ॥ ५
रासनर्तित[1]नायिकारतसङ्गरङ्गनिधान ।
शालपल्लवपाणिपल्लवगीतनृत्यनिदान ॥ ६
वेणुनादविमोहितव्रजकुञ्जसद्मनिवास ।
पङ्कजायतमत्तलोचन कुन्दसुन्दरहास ॥ ७
सोमनाथसुखाय संप्रति कृष्णगीतमिदम् ।
गीयतामनिशं जना भवपापतापभिदम् ॥ ८।१

[ इति प्रथमाष्टपदी ]

[ २ ]

वनावलिविलासिनं सरसराधिकालासिनं
निकुञ्जगृहवासिनं व्रजकुलाम्बुजोल्लासिनम् ।
शशाङ्कसितहासिनं तरुणयोषिदुल्लासिनं
पुमांसमनुदासिनं स्मरत मेघसंकाशिनम् ॥ १
सुस्निग्धान्यवधूभुजान्तरगतं पीताधरं सादरं
भ्रूचापच्युतवक्रवीक्षणशरव्याधूतधैर्यं प्रियम् ।
सा स्वप्ने सुदती विलोक्य रुदती तेन प्रियप्रेयसी
कान्तेन प्रतिबोधितापि विदधे मानं मनोहारिणी ॥ २
प्रणयविनयवाक्यान्याह गोविन्ददूती
मदनदहनमुग्धस्वान्तकान्तं निरीक्ष्य ।
कृततरणितनूजातीरवानीरवासां
विरहहतविलासां राधिकां बोधयन्ती ॥ ३
मानं मा कुरु माधवे सखि तवात्यन्तानुकूले प्रिये
दोषं स्वप्नदशानुभूतमदधस्त्वं वल्लभे तन्मृषा ।
कृष्णस्ते नवकुञ्जकेलिभवने तिष्ठत्यनङ्गाकुल-
स्तत् संभावय भावगर्भितगिरा गौराङ्गि किं कुप्यसि ॥ ४

1 Ms नायका°

गूर्जरी-रागेण गीयते ॥ २ ॥

किं सहसे मदनानलदाहम् ।
तव चरणौ प्रणमामि सदाऽहम् ॥ १
राधे माधवमनुसर धीरम् ।
किं कृशयसि विरहेण शरीरम् ॥ ध्रु० ॥
नानाजनितसुरतरसरङ्गम् ।
मा परिहर वल्लवपतिसङ्गम् ॥ २
पश्यसि किं न सखीजनवदनम् ।
हरिणा सह परिभावय वदनम् ॥ ३
किं कुरुषे पुरुषे बहुमानम् ।
वाञ्छसि यदि माधवमुखपानम् ॥ ४
त्वमसि सकलतरुणीजनरत्नम् ।
स बहु करोति कृते तव यत्नम् ॥ ५
चलसि न किं मधुसूदनगेहम् ।
कलयसि किं विकलं निजदेहम् ॥ ६
अनुनय विनयगिरा तमुदारम् ।
अपनय मदनदुरन्तविकारम् ॥ ७
सोमनाथवर्णितहरिचरितम् ।
येन विनश्यति कलिमलचरितम् ॥ ८।२

[ इति द्वितीयाष्टपदी ]

## [ ३ ]

आस्यं हास्यवियोगि भोगिलतिकालावण्यहीनोऽधरो
नो भाले तिलकोऽलकोऽप्यललितो लुप्ताञ्जने लोचने ।
वासस्ते मलिनं तनुस्तनुरियं वक्षोऽपि निर्भूषणं
तन्मे मानिनि शंस पश्यसि पुनर्माने कृते किं फलम् ॥ १
[1]मुखे मानं ध्यानं हृदि रसनिधेरेव दधतीं
सदानन्दां नन्दात्मजचरितचिन्तां प्रियतमाम् ।
स्वयं नैवायान्तीं तदतिगुरुमानक्षतिभयात्
सखी राधां काचिन्मदनकृतबाधामिति जगौ ॥ २

1 Ms सु°

केदार-रागेण ॥ ३ ॥

शमय मनोभवजनितविकारम् ।
सुखमनुभव सुन्दरि भवसारम् ॥ १

चल सखि कुरु हरिणा सह सङ्गम् ।
जनयसि किं न मनसि बहुरङ्गम् ॥ ध्रु०

वृथा वहसि नवयौवनभारम् ।
कलयति यावदसौ न विहारम् ॥ २

हरिरपि तव कुरुते सखि मानम् ।
रचय रुचिरनयने शुभयानम् ॥ ३

तव विरहानलदुःखितदेहम् ।
व्यथयति विधुरपि परिहृतगेहम् ॥ ४

सेवय विविधरसैरिह कृष्णम् ।
नवशृङ्गारसुधारसतृष्णम् ॥ ५

किमिति तनूकुरुषे तनुमेताम् ।
सुरतविहितरसभावसमेताम् ॥ ६

राजसि किमिति न [1]रमणसमीपे ।
रमय वने बहुकुसुमितनीपे ॥ ७

जनयतु वल्लवयुवतीगीतम् ।
सोमनाथहृदि सुखमुपनीतम् ॥ ८ । ३

[ इति तृतीयाष्टपदी ]

[ ४ ]

शृङ्गारी तव कुञ्जकेलिरसिको रम्यं वयस्तेऽधुना
धैर्यध्वंसि धनुर्दधाति नियतं मीनध्वजो देहिनाम् ।
माने मुञ्चसि नाग्रहं न च वचो धत्से मदीयं हृदि
.त्वं प्रेक्ष्य तव वल्लभः स भविता क्लेशैकभाजो वयम् ॥ १

1 Ms रमणी°.

राधासखी माधवमम्बुजाक्षमुवाच काचिन्मधुरं मृगाक्षी ।
मृगीदृशः कामकठोरबाणव्यथाकुलाया उपतापशान्त्यै ॥ २

राधासखीं समादाय चलिता कृष्णदूतिका ।
तन्मुखेनैव तत्सख्या अवस्थां निजगाद सा ॥ ३

गुर्जरी-रागेण ॥ ४ ॥

बहु विलपति विरहे तव राधा
मदनबाणकृतबहुविधबाधा । १

केशव किं चिरयसि चल कुञ्जम् ।
मुञ्चति कुसुमशरः शरपुञ्जम् ॥ ध्रुवं ॥

इच्छति तव मधुराधरपानम् ।
सा विदधाति मनसि बहुमानम् ॥ २

ध्यायति तव मृदुवदनसरोजम् ।
शमयति मनसि न तेन मनोजम् ॥ ३

पश्यति तव हृदयागतरूपम् ।
युवतीजनमनसामनुरूपम् ॥ ४

मञ्जुलवञ्जुलविहितनिवासा ।
माधव विरहगतस्मितहासा ॥ ५

गच्छति घनवनयमुनातीरम् ।
रहसि विमुञ्चति लोचननीरम् ॥ ६

किं कथयामि तरुण बहुवादम् ।
गमयतु तरुणीचित्तविषादम् ॥ ७

सेवकसोमनाथकृतगीतम् ।
जनयतु रसिकसुखं सदगीतम् ॥ ८।४

[ इति चतुर्थ्यष्टपदी ]

[ ५ ]

शीतांशुस्तपनत्यरण्यति गृहं हालाहलत्यम्बुजम्
हारः सर्पति चन्दनं दहनति स्फीता कथा वज्रति ।
रात्रिः कल्पति चक्षुरभ्रति पिकक्काणोऽपि बाणात्ययं
कामः कालति कृष्ण किं न कुरुषे कामं कुरङ्गीदृशः ॥ १

व्रजकुलतिलकं विषादभाजं
व्रजरमणीरमणीयकेलिगेहे ।
प्रियचतुरवचो विचित्रयुक्त्या
पुनरपि किञ्चिदुवाच गोपराजम् ॥ २

तदवस्थां समाख्याय पुनर्गीतेन माधवम् ।
बोधयन्ती सखी प्राह राधाबाधापनुत्तये ॥ ३

विराडी–रामगिरी–रागेण ॥ ५ ॥

अनिशं निशि कुरुते जागरणम् ।
त्वामतिहाय न किञ्चन शरणम् ॥ १
राधा तव विरहाकुलचित्ता ।
माधव मधुरिमपरिहृतचित्ता ॥ ध्रु० ॥
कथयति केशव तव बहु नाम ।
त्यजति तवैव कृते निजधाम ॥ २
कामबाणकृतविकलशरीरा ।
मुञ्चति लोचननीरमधीरा ॥ ३
त्वदधरमधुरपानकृतलोभा ।
चिरवियोगविगलिततनुशोभा ॥ ४
मदनजालमिव कलयति मालाम् ।
सुखय सदा करुणामय बालाम् ॥ ५
ध्यायति तव मुखपङ्कजरागम् ।
हृदि विदधासि न कथमनुरागम् ॥ ६

अगणितवैभवभूषितगेहा ।
गुणवति भवति समर्पितदेहा ॥ ७

इति कृतसोमनाथरसरचनम् ।
सुखयतु जनमबलाकुलवचनम् ॥ ८।५

[ इति पञ्चम्यष्टपदी ]

# [ ६ ]

इत्याभीरशिरोमणिं प्रति सखी संप्रोच्य वाचं शुभा-
मायाता पुनरन्तिके मृगदृशो भास्वत्तनूजातटे ।
श्रीमन्नन्दकुमारकामकठिनावस्थां विलोक्य प्रियां
प्रत्याह प्रियकोमलाक्षरवतीं वाणीं विदग्धोचिताम् ॥ १

कामाकुलो जपति नाम तवैव राधे
गन्तुं न पारयति ते कुटिलभ्रु भीत्या ।
नो चन्दने न कमले न च शीतरश्मौ
दृष्टिं ददाति दयितस्तव तन्वि तापात् ॥ २

त्वद्वर्णीसदृशं बिभर्ति शिरसा प्रीत्यैव पिञ्छं प्रिये
तन्वि त्वद्वदनानुकारिकमलं धत्ते कथञ्चित् करे ।
कण्ठक्वाणसमस्वरा मुरलिका तेनाधरे स्थाप्यते
मुग्धे त्वत्करकोमलं द्युतिधरं कर्णे कृतं पल्लवम् ॥ ३

स्वर्णे विद्युति कुङ्कुमे कुरबके पीतांशुके चम्पके
किञ्जल्के कमलस्य [1]नूत्नरजनीखण्डे नखोल्लेखिते ।
सारूप्यं तव पीतवंशकुसुमे किञ्चिद् विलोक्याबले
तिष्ठेत् सुन्दरि निर्भरस्मरमदोन्मादेन मत्तो हरिः ॥ ४

---

1 Ms नुत्नरजनी°.

सामेरी-रागेण गीयते ॥ ६ ॥

कलितललितस्वरश्रुतिवेणुमोहिता
का न कामिनि कुलं त्यजति नारी ।
मानयिष्यति मृदुलवचनस्वनो हरिः
त्वामयं तन्वि गिरिराजधारी ॥ १

कलय राधिके मदनगोपालसङ्गम् ।
सुरतरसकेलिकुतुकेन जनयिष्यति
स्फुटमसौ सुतनु ते मनसि रङ्गम् ॥ ध्रु० ॥

त्वमसि वरवर्णिनी सोऽपि वपुषः
श्रिया शोभते समुचितमेतदुभयम् ।
कम्पसे किमिति सखि रसिकवरसङ्गमे
जनय भामिनि मनो मैव समयम् ॥ २

नन्दनन्दमनिन्दितरुचिरचातुरी
सुन्दरं रमय मन्मथविलासैः ।
शमय सुन्दरि कुसुमचापशरजव्यथां
रचय सुन्दरकथा विशदहासैः ॥ ३

घनतमसि कानने वसति कमलानने
किमु विलम्बनमिदं तव विधेयम् ।
अतिचपलचारुकुटिलभ्रुकुटिनर्त्तने
तमिह सुभगे करिष्यसि विधेयम् ॥ ४

अङ्गसङ्गमसुखं तरुणि करुणा-
मयस्तेऽभिलष्यति लतासद्मवासी ।
चल मलयसौरभे वहति पवने वने
रमणि यमुनातटे नवविलासी ॥ ५

मण्डनं तव सहजलावण्यखण्डनं
किमिति विदधासि भवरत्नरूपे ।
त्वरय कामाकुले चतुरचूडामणौ
सानुकम्पा भवाभीरभूपे ॥ ६

त्वं भविष्यसि सकलयुवतिवरपूजिता
दत्तचित्ता सती गोपिनाथे ।
लोकलोचनसुखददेहमोहितजने
पावने ऽमरनिकरगीतगाथे ॥ ७

[1]इयमुदितदूतिकाविनयवचनावली
राधिकामनसि मोदं दधाना ।
सोमनाथे सदा भवतु सुखदायिनी
कामकौतुकरसानां ददाना ॥ ८ । ६

[ इति षष्ठ्यष्टपदी ]

## [ ७ ]

इति श्रुत्वा सख्याः प्रियमधुरवाक्यानि युवति-
र्विकारं कामोत्थं प्रशमयितुकामा ऽलसगतिः[2] ।
प्रसादं कर्तुं सा सुरतरमदानैर्व्रजपते-
श्चचाल प्रोत्तुङ्गस्तनभरवती चारु निलयम् ॥ १

क्वचिच्चलति सत्वरं क्वचन मन्थरं मानिनी
क्वचित् तरुषु लीयते क्वचिदितः परावर्तते ।
क्वचिच्चकितमीक्षणं क्षिपति दिक्षु भीतेव सा
करोति न कलक्वणं क्वचन कर्णयोः कोकिलम् ॥ २

केदाररागेण ॥ ७ ॥

राधा हरिभवनं प्रति वलिता ।
शशिवदना मदनालसगमना वचनारतिललिता ॥ ध्रु०
कुसुमकदम्बकलितकबरीभरविलसदनङ्गतरङ्गा ।
कामविजयपरमेव विराजितलोचनभृततरङ्गा ॥ १
कुचतटनिकटविलसिततरलावलिरलिकतिलककृतशोभा ।
कटिपटुरटितरुचिरसनागुणवर्धितत्रिभुवनलोभा ॥ २

1 Ms इद°. 2 Ms कामालसगतिः.

पदकमलोपरिनादितनूपुरमधुरमधुव्रतमाला ।
मधुरिमसकलधुराधरणोचितविरचितभूषणजाला ॥ ३
रतिरसरसिकशिरोमणिना सह सा शय्यामधिशयिता ।
व्रजकुलतिलकविहितपरिरम्भणपरिभविताखिलदयिता ॥ ४
हठकृतमुखचुम्बनकरजक्षतकम्पितपाणिकिशलया ।
प्रमुदितपिकपारापतकूजितमिश्रितसस्वनवलया ॥ ५
सा कुरुते निजकञ्चुकमोचनचटुलरमणकररोधम् ।
पालयतीव पयोधरयुगलं शरणागतमिव योधम् ॥ ६
सापि निपीय सरसकृष्णाधरमादकमधुरसमत्ता ।
इति न च वेद काहमयमपि को रतये तनुरपि दत्ता ॥ ७
सोमनाथसेवकमुखनिःसृतराधाकृष्णविनोदम् ।
शृणुत तदिह विबुधा यदि सुन्दरमिच्छथ निजहृदि मोदम् ॥ ८।७

[ इति सप्तम्यष्टपदी ]

## [ ८ ]

घटयति भुजबन्धं निर्भरालिङ्गनार्थी
तदधरमधु पीत्वा प्रेमभावं व्यनक्ति ।
जनयति रदखण्डं पण्डिता कामशास्त्रे
वशयति पतिचेतश्चेतनीकृत्य कामम् ॥ १
रमयति स्म मनोभवपीडिता
व्रजपतिं वनिता मणिमण्डिता ।
विविधकामकलाकुशला रतिं
जितवती निजदेहजसौष्ठवैः ॥ २

गूर्जरीरागेण काहलिरागेण वा ॥ ८ ॥

रमयति राधा नन्दकुमारम् ।
नवनिकुञ्जभवने मृदुपवने नानाविहितविहारम् ॥ ध्रु०
आलिङ्गति चुम्बति करजक्षतमर्पयति प्रियदेहे ।
बोधयतीव मदनमदमद्भुतकेलिकलागुणगेहे ॥ १

संभ्रमचलितललितभृकुटीगतिरतिनिपुणा रतिरङ्गे ।
व्रजभूषणवक्षसि वरतरुणी राजति गुणगणसङ्गे ॥ २
श्रमशीकरशोभितमुखपङ्कजचपलालकमधुपाली ।
पिबति मधुरमधरं व्रजरमणी तदधरमपि वनमाली ॥ ३
विलसति नीलगिरेरुपरिस्था कनकलतैव सकम्पा ।
तन्वी निजलावण्यतिरस्कृतसजलजलदगतशम्पा ॥ ४
रतिसमयोचितविरचितमृदुतरवचनावलिरनुकूला ।
निधुवनरभसगलितकबरीभरकल्पितनीलदुकूला ॥ ५
लोचनयुगलममीलि विशालमलोपि विशेषकचित्रम् ।
परिरम्भणशिथिलितभुजवल्लीहृदयमकम्पि विचित्रम् ॥ ६
अतिमन्दीकृतजितकदलीरुचिरुचिरघनस्थललीला ।
मधुमथनप्रियसरसरसाकुलपुरुषायितरतशीला ॥ ७
इति नवरङ्गसङ्गसुखवर्णनमधिकविनोदरसालम् ।
सोमनाथहृदि जनयतु संप्रति शातमतीव विशालम् ॥ ८।८

[ इत्यष्टम्यष्टपदी ]

[ ९ ]

विचलदलकमालालोलताटङ्कशोभा
निजरवजितनृत्यन्मत्तपारापता सा ।
घनजघनकुचान्तः कृष्णमापीड्य रेमे
रणति जयमिवास्याः कान्तकाञ्चीकलापः ॥ १
गलन्मुक्तामालं शिथिलनयनं लुप्ततिलकं
श्रमादम्भोबिन्दुप्रसररमसंकीर्णचिकुरम् ।
अतिक्षामालापं [1]मधुरिमधुराधारिवदनं
रतान्ते तद्रूपं तदतिरमणीयं मृगदृशः ॥ २
विहरति वरवर्णिनी निकुञ्जे ललितलतातरुणप्रसूनपुञ्जे ।
नवलरसवशीकृतेन पत्या समुदितमारमनोरथेन रत्या ॥ ३

1 Ms °भ्रकुटी°.

रामगिरीरागेण ॥ ९ ॥

विहरति ललितलताकृतभवने ।
व्रजदयिता दयिताननचुम्बनचारुतरा मृदुपवने ॥ ध्रु० १
रुचिरकुसुमकोमलदलपल्लवपरिकल्पितशुभशयने ।
स्थितवति रतिरमणीयतरे रमणे जितपङ्कजनयने ॥ २
सुरतकलाकौतुककलिताकलिता कुरुते रतिरासम् ।
हरिरपि बन्धविशेषरसैरधिकं तनुते स विलासम् ॥ ३
क्वचिदुत्सङ्गनिवेशितया स तया विलसति रतिकारी ।
राशीकृतमरकतमणिमध्यसुवर्णलतारुचिहारी ॥ ४
कुटिलभ्रुकुटिकोदण्डविनिःसृतपञ्चशराशुगभीतम् ।
मृगमिव सा विवशीकुरुते रमण प्रकटितरतिगीतम् ॥ ५
तरलालककुलकलितमनोहरवदनविलज्जितचन्द्रा ।
अतिरसरभसपरा परिखेलति जनितविलोचनतन्द्रा ॥ ६
उपरि विलासवती भवती भवतीव कलाकुशला सा ।
जनयति कं न रसं पतिरेवं वदति परिस्फुटहासा ॥ ७
नवनवकुञ्जविलासभरेण वशीकृतनन्दकुमारम् ।
जनयतु वरतरुणीरतिरमितं सोमनाथसुखसारम् ॥ ८।९

[ इति नवम्यष्टपदी ]

## [ १० ]

भ्रुवौ कोदण्डः किं दृगियमतिलोला किमिषवः
कुचद्वन्द्वं चैतत् किमिति करिकुम्भस्थलयुगम् ।
असौ निःश्वासः किं रसति रशना कामनृपतेः
चमूर्नेयं राधेत्यतिचकितचित्तोऽवतु हरिः ॥ ९

प्रत्यङ्गवर्णनमिषेण विलासवत्याः
संभाव्य कामनृपतेः पृतनां मुरारिः ।
इच्छन्नभीरुरपि भीरुरिव प्रसादं
संभोगयोगरुचिरं निजगाद राधाम् ॥ २

1 Ms. मधुरिपुमधुराधारि.

रामगिरीरागेण गीयते। मेवाडरागेण वा ॥ १० ॥

राधे वशयसि मामधिकम्।
त्वमसि विदग्धतरा वरसुरते जनयसि निरवधिकम् ॥ ध्रु० १
त्रिजगति रतिकौशलवति रसिका युवती का मधुरा।
त्वयि नवकुञ्जविहारिणि विलसति संप्रति कामधुरा ॥ २
धनुरिव भ्रुकुटियुगं तव भामिनि वक्रिमसौभगसारम्।
शितशरनिकर इव स्फुटशोभननयनमिदं चलतारम् ॥ ३
द्विरदकुम्भकमनीयतरं हृदि वहसि पयोधरभारम्।
स्थितमवमत्य नृपस्मरसमरे शृणिसमनखप्रहारम् ॥ ४
दुन्दुभिरिव रशना तनुते तव गुरुगम्भीरनिनादम् ॥
को विदधाति वरोरु भवत्या सह रणरङ्गविवादम् ॥ ५
उद्भटमल्लचमूरिव राजति भवती भावविमिश्रा।
तव संगमसुखहेतुरियं मम मुदमुद्वहति तमिस्रा[1] ॥ ६
कलय वलयरञ्जितकरकमले मदुपरि भावविनोदम्।
मामनुचरमिव मानिनि मानय नय चेतो मम मोदम् ॥ ७
व्रजपतिरचितरुचिरवचनावलिजनितमनोजविलासा।
सोमनाथसेवकसुखदा सा भवतु विशदरुचिहासा ॥ ८। १०

[ इति दशम्यष्टपदी ]

## [ ११ ]

मन्मथविलासकारी सरसवचोभिर्विलासिनीवदनम्।
वर्णयति भूरिभावैर्व्रजरमणीरमणीयकामपूरः ॥ १

श्रीरागेण आसाउरीरागेण वा गीयते ॥ ११ ॥

मदयति मम चेतस्तव वदनम्।
शरदि विशदसरसिजमिव मानिनि निरुपममधुरिमसदनम् ॥ ध्रु० १
खञ्जनमदभञ्जनरतिरञ्जितलोचनरचितविलासम्।
अलघुललितलावण्यविमिश्रितकोटिसुधासमहासम् ॥ २
विमलदशनकिरणावलिदारितमन्मथतिमिरसमूहम्।
जनयति कस्य न मनसि विहारिणि शशधरविषयक[2] मूहम् ॥ ३

---

1 Ms तमिश्रा Ms 2 °विषयिक°.

सुभगविशालभालभुवि वर्तुलतिलककमुज्ज्वलशोभम् ।
शशिनि शशभ्रमदायिविशेषकलोकनवर्द्धितलोभम् ॥ ४
बिम्बाधरनिःसरदमृतद्रवविद्रावितरतिखेदम् ।
चुम्बनचारुनिषेधविधावधिकं भृकुटीभृतभेदम् ॥ ५
अगणितगुणगौरवगुम्फितमिदमद्भुतकेलिकलापम् ।
पारापतप्रतिवादकमादकमृदुतरमधुरालापम् ॥ ६
कुङ्कुमरसरञ्जितमङ्गलमयपत्रविचित्रकपोलम् ।
सुरतविनोदकृते कुरुते मम हृदयमतीवविलोलम् ॥ ७
सोमनाथविभुना रचिता रुचिरा वचनावलिरेषा ।
रसिकजनेषु मुदं तनुतामतिमञ्जुलभावविशेषा ॥ ८।११

[ इत्येकादश्यष्टपदी ]

## [ १२ ]

अधरमधुसुधारसास्पदेन द्विजकिरणावलिदीर्घचन्द्रिकेण ।
मृगमदतिलकाङ्किना विना मे तव मुखचन्द्रमसा किमन्यदिष्टम् ॥ १

इयमधिकमनोज्ञा कामिनी चन्द्रचूडा-
मणिरहमपि लीलाक्रीत एवाऽनयाऽस्मि ।
इति निजवशगत्वं द्योतयन्नाह नारी-
नयननलिनपीतः पीतवासा मुकुन्दः ॥ २

धन्याशीरागेण गीयते ॥ १२ ॥

राजते तरुणि तव तारुण्यलीला ।
विविधरसरङ्गरञ्जितसुरतकौतुके
कोटिमन्मथमथनमाधुर्यशीला ॥ ध्रु० १
कुसुमचयचित्रचुम्बितचिकुरचामरं
चपलयति चेत एतन्मदीयम् ।
श्रवणपुटपुरटताटङ्करुचिरं [1]चलं
हन्ति मामपि त्वदीयम्[2] ॥ २

1 Ms चले. 2 Ms तदीयम्

सुमुखि तव लोचनं कञ्जमदमोचनं
चुम्बने कं न भावयति भावम् ।
इयमधरमाधुरी रहसि पीता सती
नाशयति दुःसहं मदनदावम् ॥ ३
जितकण्ठकलकण्ठि नेतिनेति च वच-
स्तन्वि पोषयति पीयूषवर्षम् ।
स्निग्धकज्जलबिन्दुरिन्दुमुखि वर्धयति
चारुचिबुके कृतो मनसि हर्षम् ॥ ४
सुभगभुजवल्लिकागाढपरिरम्भणं
मामवति कामसंग्रामकाले ।
उच्चकुचरोचिरञ्चितमुरो मामकं
मारयति पुष्पधन्वा न बाले ॥ ५
नाभिगम्भीरसरसीतटे मेखला-
सारसी रटति सौरतविलासम् ।
दलितकलधौतकदलीजघनमण्डली
मामसौ सुदति विदधाति दासम् ॥ ६
मञ्जुमञ्जीरधीरध्वनितबन्धुरं
चटुलचरणद्वयं जितमरालम् ।
वसति मम मानसे मुखवदनखचन्द्रिका
खण्डते[1] तन्वि तिमिरं करालम् ॥ ७
इति कुञ्जकेलिकमनीयमुखनिःसृतं
वल्लवीदेहवर्णनविशेषम् ।
सोमनाथे सदा शुभदमिदमस्तु तद्-
वचनरचनं कथितरूपरेखम् ॥ ८।११

[ इति द्वादश्यष्टपदी ]

[ १३ ]

ददस्व परिरम्भणं तरुणि पायय स्वाधरं
विनोदय कुचौ रुचा कनककोककान्ती इमौ ।

1 Ms °ति.

प्रिये क्वणय किङ्किणीं जघनदर्शनं देहि मे
हृदि [1]स्वपदमर्पय प्रिय इति प्रियामुक्तवान् ॥

राग आसाउरी ॥ १३ ॥

राधे विरचय मयि रतिरङ्गम् ।
सुतनु सुतनुपरिरम्भणकर्मणि चटुलकुटिलभ्रूभङ्गम् ॥ ध्रु० १
पायय पिब मानिनि मधुराधरमधुमादकमतिमिष्टम् ।
मधुरिमकृतपीयूषपराभवमगणितमणितविशिष्टम् ॥ २
मदुरसि सरसि विनोदय सुन्दरि कुङ्कुमरुचिकुचकोकौ ।
परिमोचय कञ्चुकपञ्जरतः कुरु कुतुकेन विशोकौ ॥ ३
रुचिकरचपलविलोचनचुम्बनचारुतराधरशोभम् ।
किं कुरुषे पुरु खेलनकारिणि मानविवर्द्धितलोभम् ॥ ४
मुखरय मुषितमृगीगणदृष्टे पटुमेखलाकलापम् ।
दूरीकुरु करभोरु कृशोदरि मनसि मदनपरितापम् ॥ ५
कामकनकसिंहासनमिव मे दर्शय जघनमुदारम् ।
सफलय मम नयने वरवर्णिनि निधुवनवैभवसारम् ॥ ६
यावकरसरञ्जितमिदमर्पय मम हृदि चरणसरोजम् ।
शमय विषमविलोचनलोचनपावकदग्धमनोजम् ॥ ७
इति नवकुञ्जरसप्रियभाषितमद्भुतवचनविमिश्रम् ।
सोमनाथहृदि हरतु जगन्मथमन्मथमोहतमिस्रम्[2] ॥ ८।१३

[ इति त्रयोदश्यष्टपदी ]

## [ १४ ]

यद्वाचो हिमशीतला हिमकराकारानुकारं मुखं
यत्पाणी कमलश्रियौ विहसितालोकः सुधामन्दिरम् ।
यच्चेष्टा व्रजपालबालवनितामिष्टा सदेष्टः सता-
माविर्भूय मुदं ददातु हृदि मे सः श्रीयशोदासुतः ॥ १
अतिकामितया तयानुरक्तः कुरुते तद्गुणगौरवस्तवं सः ।
कथयन्नुपमानमानताङ्ग्या व्रजनाथो निजयोग्यतां च शंसन् ॥ २

---

1 Ms स्वपपद°. 2 Ms °स्र

कनडु ॥ १४ ॥

दिशि दिशि सुभ्रु ते [1]सुषमा ।
गीयते सखि दीयते नरकिन्नरैरुपमा ॥ ध्रु० १

त्वं प्रिये चपलाहमस्मि घनो घनोरु वरः ।
त्वं लता ललिताहमस्मि तमालनीलतरः ॥ २

त्वं मनोजतरङ्गिणी जलधिस्तवाभिमतः ।
त्वं यदा नलिनी तदाहमलिर्मरन्दरतः ॥ ३

त्वं समा कलधौतकोमललेखयासि यदा ।
गण्यते निकषोपमा ममापि तन्वि तदा ॥ ४

त्वं यदा सरसीव भासि रते रसालतया ।
कल्पितोऽहमिहानुरागिणि तन्मरालतया ॥ ५

त्वं यदा मदविह्वला करिणीव कुञ्जरता ।
जायते मयि चारुहासिनि मत्तकुञ्जरता ॥ ६

त्वं यदा हरिणीव चञ्चललोचना सुरते ।
कृष्णसारसमानता मयि संम्मता नु रते ॥ ७

राधिकागुणगौरवस्तुतये हरेरुदितम् ।
सोमनाथजने सदा कुरुतादिदं मुदितम् ॥ ८।१४

[ इति चतुर्दश्यष्टपदी ]

## [ १५ ]

त्वं विद्युज्जलदोऽहमस्मि भवती वल्ली तमालोऽस्म्यहं
त्वं शृङ्गारतरङ्गिणी यदि तदा वारानिधिः सोऽस्म्यहम् ।
त्वं चेत् त्पङ्कजिनी तदाहमलिराट् त्वं स्वर्णरेखा यदा
सोऽहं स्यां निकषस्तदा समुचिता शोभा द्वयोरावयोः ॥ १

राधासखी वर्णयति स्वरूपं वृन्दावनाधीशमनोऽनुरूपम् ।
प्रियस्वसख्यं परितुष्टचित्ता परस्परालापविशिष्टचित्ता ॥ २

1 Ms सुखमा

रामगिरी-सारङ्गदेशाखैर्गीयते ॥ १५ ॥

कामवामरसे ।
राजति राधा नवलवशे ॥ ध्रु० १
कुञ्जतले नवपल्लवतल्पे ।
मुदितमधुव्रतकोकिलजल्पे ॥ २
रचितविशेषकचित्रविशेषा ।
कलितविलोचनकज्जलरेपा ॥ ३
चलकुण्डलमण्डितमुखचन्द्रा ।
नयनस्थितसुन्दररसतन्द्रा ॥ ४
विकचकुसुमगुम्फितकचभारा ।
उरसि मनोरममणिमयहारा ॥ ५
कुङ्कुमरसरञ्जिततनुवल्ली ।
भाति कुचोपरि मञ्जुलमल्ली ॥ ६
मेचकमणिकल्पितकरवलया ।
निपुणतरा सुरते नवकलया ॥ ७
सोमनाथसेवककृतगानम् ।
रसिकजने कुरुता सुखदानम् ॥ ८।१५

[इति पञ्चदश्यष्टपदी]

## [१६]

पुन्नागनागनवचम्पकजातियूथी-
मालत्यशोकमधुमत्तमधुव्रताढ्ये ।
वृन्दावने नवनिकुञ्जतले तरुण्या
भेजे हरिर्मदनकेलिरसं वसन्ते ॥ १

वसन्तरागेण ॥ १६ ॥

रमते हरिरिह रुचिरनिकुञ्जे ।
कुसुमितकुञ्ज[1]कुटिरतरुमण्डलमण्डितमण्डपपुञ्जे ॥ ध्रु० १

1 Ms 'कुटीर'.

कुरबककरुणकदम्बकदलिकाशोकरसालसमेते ।
विदधति युवतिजनेषु मनोरममदनरसालसमेते ॥ २

विकचबकुलकलिकामञ्जुलमधुमत्तमधुव्रतमाले ।
कोकिलकुलकोलाहलकम्पितपल्लवतालतमाले ॥ ३

स्पृशति कुचौ मधुरं तदधरमधु पिबति निकुञ्जविहारी ।
सापि ललाटपटलपरिनर्तितभृकुटि[1]नर्टी नवनारी ॥ ४

व्रजपतिविहितविशददशनव्रणपीडनमक्षममाना ।
कुप्यति वदति जहीहि जहीहि करावपि कम्पयमाना ॥ ५

श्लथयति कटितटरुचिररशना[2]गुणगुम्फितनीवि[3]निबन्धम् ।
नहि नहि वचनममृतमिव रचयति जनयति निजभुजबन्धम् ॥ ६

हृतवति घनजघनावरणं रमणे[4] प्रतिनिर्मितहासा ।
नर्तनमिव कुरुते सुरतेषु कटीत्रिपटी सविलासा ॥ ७

सोमनाथसेवकमुखनिःसृतमुभयकिशोरचरित्रम् ।
कुटिलकामकलुषं जनमेतदिदं विदधातु पवित्रम् ॥ ८।१६

[ इति षोडश्यष्टपदी ]

## [ १७ ]

क्लिष्टाधरारुणिमशोणिमचारुचक्षुः
 सस्वेदबिन्दुवदनं शिथिलालकश्रि[5] ।
क्षामाक्षरं पुलकवेपथुपूर्णगात्रं
 रूपं तथापि रुचये सखि पङ्कजाक्ष्याः ॥ १

देशाखरागेण भैरवरागेण वा ॥ १७ ॥

अद्भुतशोभा रजनिविरामे ।
सखि संप्रति राधिकाशरीरे निजपतिपूरितकामे ॥ ध्रु० १
गलिताधरशोणिमशिथिलालकशोभितवदनसरोजे ।
मुकुलितलोचनचुम्बनलम्बितकज्जलमुदितमनोजे ॥ २

1 Ms °भृकुटी° 2 Ms °रसना°. 3 Ms °नीवी° 4 Ms रमणं 5 Ms °कश्री

मृगमदलिखितविचित्रचित्ररुचिकुचतटनखप्रहारे ।
भुजपरिरम्भविमर्दविखण्डितमुक्तामणिमयहारे ॥ ३

श्रमजलविपुलपुलकपृथुवेपथुविस्मृतविरलाभरणे ।
कटिविघटितमृदु[1]वररशनागुणपरिहृतजघनावरणे ॥ ४

अतिरुचिरुचिकरलम्भितनीवीदर्शनघर्षितरमणे ।
मन्थरचरणविहारविनिर्जितमदवारणवरगमणे ॥ ५

दुस्तरतरमन्मथसङ्गरजितवरवृन्दावननाथे ।
नवनिकुञ्जमधुकरगुञ्जारवनिगदितगुणगणगाथे ॥ ६

चलकुण्डलमर्दितगण्डस्थलचित्रितमकरीमुद्रे ।
विविधनिखिलपौरतरसपोतक[2]तोषितसुरतसमुद्रे ॥ ७

सोमनाथसेवकवर्णितमिति रतवल्लवीविनोदम् ।
शृणुत सकलकलिकालिमहारि भक्तमनःकृतमादम् ॥ ८।१७

[ इति सप्तदशयष्टपदी ]

## [ १८ ]

पुष्पाणि मे रचय केशव केशभारे
हारेण रोचय कुचौ तिलकेन भालम् ।
नेत्रेऽञ्जनं कुरु कपोलतलेऽपि चित्रं
कृष्णं जगाद मृगशावविलोचनेति ॥ १

रामगिरीरागेण ॥ १८ ॥

वदति प्रिया सुरतेन तेन वशीकृते रमणे ।
केलिकौतुककौशलैरतनुव्यथाशमने ॥ ध्रु० १

कुसुमानि मे कबरीभरे रचय प्रभो रुचिरम् ।
अलकं प्रसाधय माधव स्वकरेण चारु चिरम् ॥ २

1 Ms °वरसमा°. 2 Ms °पोततोषित°.

यादृशी तव गण्डमण्डलमण्डिता मकरी ।
क्रियते न किं मम तादृशी मदनप्रतापकरी ॥ ३

लोचने कुरु कज्जलं तिलकं ललाटतले ।
कुण्डले परिधापय प्रिय सुश्रवोयुगले ॥ ४

तार हारममुं कुरुष्व मदीयकण्ठतटे ।
नन्दनन्दन चन्दनं कुचयुग्मकामभटे ॥ ५

नीलरत्नमयं करे वलयं निधेहि हरे ।
वर्धय प्रिय बीटकैररुणप्रभामधरे ॥ ६

अंशुकं न करोषि किं कलकिङ्किणीसहिते ।
प्राणनाथ कटीतटे सुरतत्रपारहिते ॥ ७

नूपुरौ नवनादवादनकारिणौ चरणे ।
जीवितेश विधेहि वल्लभ यावकाभरणे ॥ ८

सुन्दरीवचनामृतश्रवणेन तुष्टमनाः ।
सोमनाथहृदि स्थिरीभवतादसौ सुमनाः ॥ ९।१८

[ इत्यष्टादश्यष्टपदी ]

[ १९ ]

तस्याः स्पर्शसुखाशया कृततनोरङ्गेषु भूषाङ्गण-
न्यासं नन्दकुमार एव कुरुतेकामाङ्कुरोद्भेदकृत् ।
मुक्तागुम्फितमेखलागुणयुता बध्नाति नीवीं कटौ
दत्ते चित्रमुरोजयोर्विरचयन् पत्रं कपोलस्थले ॥ १

कर्णौ कुण्डलिनौ करोति नयने [1]सूक्ष्म क्षिपत्यञ्जनं
तद्भाले तिलकार्पणेन कथयत्यन्या न धन्याः स्त्रियः ।
तद्वेणी किल कामचामरमिति प्रार्चेत्यसौ पुष्पकै-
रित्थं कामकलाकलापकुशलो राधावशे वर्तते ॥ २

1 Ms °शक्ष्म°

धन्याशीरागेण ॥ १९ ॥

हृदि रङ्गरसम् ।
जनयति कामकलासरसम् ॥ ध्रु० १

कुसुमचयैरञ्चति कुचभारम् ।
मनुते मन्मथचामरसारम् ॥ २

मुखमलिके तिलकेन सलोभम् ।
कुरुते चन्द्रमसा समशोभम् ॥ ३

क्रियते चक्षुषि कज्जलरेषा ।
तेन तिरस्कृतखञ्जनवेषा ॥ ४

कर्णपुटस्थितकुण्डललीला ।
अनुसृतबन्दीकृतरविलीला ॥ ५

लिखति कपोले मृगमदचित्रम् ।
निजरसमिव निःक्षिपति विचित्रम् ॥ ६

सोमनाथसेवकसुखकारी ।
भवतु सदा गिरिराजविहारी ॥ ७ । १९

[ इत्येकोनविंशतितमाष्टपदी ]

## [ २० ]

वशीकृतः संप्रति राधयासौ करोति तद् यद् वदति प्रिया सा ।
तदङ्गसङ्गामृतकाम्ययैव विभूषणन्यासमयं व्यधत्त ॥ २

कथयति सखि राधा प्राणनाथं प्रतीदं
मम शिरसि शिखण्डं कुण्डले कर्णदेशे ।

रचय रुचिरगुञ्जापट्टकूलं कटौ मे
त्वमिव भवितुमीहे वंशिकां देहि पाणौ ॥ २

गामगिरीरागेण मण्ठतालेन ॥ २० ॥

राधा वदति रसाभिनिवेशा ।
त्रिभुवनयुवतीवरयुवतीसंविरचितमोहनवेशा ॥ ध्रु० १

मुकुटीकुरु मम मदनमनोहरशिरसि शिखण्डिशिखण्डम् ।
मकराकृतिकुण्डलधरणेन महासभमण्डपगण्डम् ॥ २

गुञ्जामणिमाला मम कण्ठे सुन्दरवर परिधेया ।
सदयहृदय हृदये मम मानद मृगमदरुचिरपि देया ॥ ३

कनकरुचिरवसनेन शुभाशय शोभय कटितटदेशम् ।
मुरलीधर मुरलीमर्पय मम गापय मदननिदेशम् ॥ ४

त्वमिव भवामि भृतामितगौरवगिरिवर दधती रूपम् ।
हरिरपि गदति सुदति रतमिच्छसि कामिनि मयानुरूपम् ॥ ५

मामपि कुरु मानिनि निजभूषणभूषितमम्बुजनयने ।
शशिमुखि पश्चशरं परिभावय पल्लवकोमलशयने ॥ ६

इति कथयति सति हसति शनैरिह विकसितमुखतामरसा ।
पतिविजयाय विजृम्भितरतिरणपौरुषरसरुचिसरसा ॥ ७

इति रसकेलिकथासु परस्परमुभय[1]किशोरकजल्पम् ।
सोमनाथकथितं कथयन्तु मुदा परिहाय विकल्पम् ॥ ८।२०

[ इति विंशतितमाष्टपदी ]

*
* *

क्षोभं क्षामकटिर्जगाम जघने जाते च किञ्चिज्जवे
प्रस्विन्ना तनुवल्लरी शिथिलितो दोर्वल्लिबन्धोऽभवत् ।
पर्यस्तालकमण्डली मुकुलिते नेत्रे उरः कम्पितं
पुंभावेन जुगोप गोपतरुणी स्त्रीत्वेऽपि धैर्यच्युतिम् ॥ १

*
* *

1 Ms °किशोक°.

सत्कामकेलिकृतकौतुकवेषधारी
हारी हरिन्मणिमनोहरदेहकान्तिः ।
श्रीराधिकावदनपङ्कजपानमत्तो
मत्तोषकः सपदि सुन्दरमूर्तिरस्तु ॥ २

नर्तितकुटिल[1]भ्रुकुटीप्रकटीकृतकोकशास्त्रवैदग्ध्यः ।
कलयतु हृदि प्रवेशं कालिन्दीकेलि[2]कौतुकः कृष्णः ॥ ३

न स्पर्द्धा जयदेवपण्डितकृतौ नो रञ्जनीया बुधा
राजभ्यो धनलाभलोभकलया न व्याकुला मन्मतिः ।
भक्ताः किं नु हरेर्गुणानुकथने रक्ता [3]भवन्त्येव नो
तन्मे स्वस्य मनोविनोदनकृते श्रीकृष्णगीतिः [4]कृता ॥ ४

इति श्रीसकलकविचक्रचूडामणिना श्रीसोमनाथमिश्रेण विरचिता अष्टपदी [5]संपूर्णा ॥

*

1 Ms °भृकुटी.° 2 Ms °केली° 3 Ms °भवन्त्येव तेनो 4 Ms कृता 5 Ms °र्णा..

[ पुष्पिकानन्तरमिदमधिकं समुपलभ्यते ]

गुञ्जापुञ्जावतंस प्रकटितनटवेषसुन्दर कृष्ण ।
मुरलीवन्दितवदनो बल्लववनितावृतो जयतु ॥

करकृतमपराधं क्षन्तुमर्हन्ति सन्त ॥
समाप्तोऽयं ग्रन्थ ॥ संवत् १६३७ वर्षे कार्तिकवदि १ रवौ राजनगरस्थेन
ज्योतिश्री आपाजीतनयेन लिखितं ॥ समाप्तोऽयं गीतगोविन्द ॥ श्री ॥

# प्रतीकानुक्रमणिका

[ The first figure indicates पद and the second अष्टपदी. ]

# राजस्थान पुरातन ग्रन्थमाला

## प्रकाशित ग्रन्थ

१ प्रमाणमञ्जरी – तार्किकचूडामणि सर्वदेव। २ यन्त्रराजरचना – महाराजाधिराज जयसिंहदेव कारिता। ३ कान्हडदे प्रबन्ध – महाकवि पद्मनाभ। ४ क्यामखांरासा – नवाब अलफखां (कविवर जान)। ५ लावारासा – चारण कविया गोपालदान। ६ महर्षिकुलवैभवम् – विद्यावाचस्पति स्व. श्री मधुसूदनजी ओझा। ७ हस्तिदीपिका – मौनि कृष्णभट्ट। ८ राजविनोद काव्य – कवि उदयराज। ९ तर्कसंग्रहफक्किका – क्षमाकल्याणगणी। १० वृत्तसंग्रह – अज्ञातकर्तृक। ११ शृंगारहारावलि – हर्षकवि। १२ कृष्णगीति – कवि सोमनाथ।

## प्रेस में

१ त्रिपुराभारतीलघुस्तव – सिद्धसारस्वत लघुपण्डित। २ बालशिक्षा व्याकरण – ठक्कुर संग्रामसिंह। ३ करुणामृतप्रपा – महाकवि ठक्कुर सोमेश्वरदेव। ४ पदार्थरत्नमञ्जूषा – पं. कृष्णमिश्र। ५ शकुनप्रदीप – पं. लावण्यशर्मा। ६ उक्तिरत्नाकर – पं. साधुसुन्दर गणी। ७ प्राकृतानन्द – पं. रघुनाथ कवि। ८ ईश्वरविलासकाव्य – पं. कृष्णभट्ट। ९ चक्रपाणिविजयकाव्य – पं. लक्ष्मीधर भट्ट। १० काव्यप्रकाश – भट्ट सोमेश्वर। ११ कारकसंबन्धोद्योत – पं. रभसनन्दी। १२ नृत्यरत्न कोश – महाराजाधिराज कुंभकर्णदेव। १३ नन्दोपाख्यान – अज्ञातकर्तृक। १४ चान्द्रव्याकरण – चन्द्रगोमी। १५ शब्दरत्नप्रदीप – अज्ञातकर्तृक। १६ रत्नकोश – अज्ञातकर्तृक। १७ कविकौस्तुभ – पं. रघुनाथ मनोहर। १८ एकाक्षरकोशसंग्रह – विविधकविकर्तृक। १९ शतकत्रयम् – भर्तृहरि, धनसारकृत व्याख्यायुक्त। २० वसन्तविलास – अज्ञातकर्तृक। २१ दुर्गापुष्पाञ्जलि – म. म. पं. दुर्गाप्रसादजी द्विवेदी। २२ दशकण्ठवधम् – म. म. पं. दुर्गाप्रसादजी द्विवेदी। २३ गोरा बादल पदमिणी चऊपई – कवि हेमरतन। २४ बांकीदासरी ख्यात – महाकवि बांकीदास। २५ मुंहता नैणसीरी ख्यात – मुंहता नैणसी इत्यादि।

प्राप्तिस्थान – सञ्चालक, राजस्थान पुरातत्त्वान्वेषण मन्दिर, जयपुर।